त्युच्यते तदा गुणात्पुरुषादेव षष्ठीति न व्यभिचरति लक्षणम् ॥ २ ॥

उक्तमिदं क्रियाकारकपूर्वकः सम्बन्ध इति, तत्र क्रियाकारकसम्बन्धोऽस्य निमित्तं । स च फलभूतात्सम्बन्धादनुमीयमानो न विशेषेणानुमातुं पार्यते, अपि तु सामान्येन एवस्वभावत्वादनुमानस्येति कुतोऽस्य विशेषावसाय इत्याह ॥

निमित्तनियमः शब्दात् सम्बन्धस्य न गृह्यते ।
कर्मप्रवचनीयैस्तु स विशेषेऽनुरुध्यते ॥ ३ ॥

पितुः पुत्रः, पशोः पदं, इत्यादौ सम्बन्धिस्वरूपविशेषावधारणादेव नियतस्थितिजननादिक्रियाभावान्वितत्वं सम्बन्धस्य प्रतीयते। राज्ञः पुरुष इत्यादौ तु (अन्वादिभि मपापहारप्रभृतिभिरपि)? स्वस्वामिभावस्य सम्भवाद्यदपि नियतनिमित्तत्व नावधार्यते, तथापि दानादीनामन्यतमाविनाभावात् क्रियानुमितस्वसम्बन्धिस्वरूपादिति नायं कर्मप्रवचनीयविषय । क चित्तु शब्दसामर्थ्यान्निमित्तविशेषो नावधार्यते। निमित्तसामान्यावधारणा तु सोऽयमेवंविधो विषय. कर्मप्रवचनीयानां तैरन्वादिभिर्निवृत्तनियमएव च क्रियते सम्बन्धः। तथा हि शाकल्यस्य संहितामनु प्रावर्षदित्यत्र संहिताप्रवर्षणयो. हेतुहेतुमद्भावो निशामयतिक्रियाजनित इति अनुना वेद्यते । तथा क्रिययान्यत्रानुनिशम्येत्यादौ साहचर्योपलब्धेः कर्म प्रोक्तवन्त इति कर्मप्रवचनीयेष्वनिक्रान्तक्रियाप्रकाशनां (प्रीयकारान्)? सम्प्रति क्रियामयं नह्येव भवति । नापि तद्वाचकक्रियापदस्याश्रुतितेभ्यो ऽभिधायकत्वाभावात् नियमद्योतकत्वाभावात् । स्वरूपेण तु सम्बन्धो विभक्त्यैव प्रतिपाद्यत इति नापि तद्वाचकक्रियापदाक्षेपेऽनुशब्दस्य सामर्थ्यं कारकविभक्त्यभावादिति सम्बन्धविशेषावद्योतकत्वस्थापित कर्मप्रववनीयानान्तदुक्तमनन्तरकाण्डे। क्रियाद्योतको न सम्बन्धस्य वाचकः। नापि क्रिया पराक्षेपात् सम्बन्धस्य तु भेद इति । एवमपि ब्रह्मदत्ते पञ्चाला इति परिपालनादिक्रियाया निमित्तत्वं स्वस्वामिभावस्याऽधिना वेद्यते।अभित. पुरजनेभ्यः प्रतीति परपराजयनादिक्रियावृत्तेरनुकार्यानुकरणभावो जनाभिन्नः सम्बन्धइति प्रतिना प्रकाश्यते । एवमन्यत्रापि यथायोगमनुगन्तव्यम् । तदयमश्रुतक्रियाविषयसम्बन्धे कर्मप्रवचनीयानां महिमा,

क्रियाविषये तु श्रूयमाणैव क्रिया नियमनिमित्तमवधार्येत इति ॥ ३ ॥

नन्विदं विचार्यते। शेष इत्येव सिद्धायां षष्ठ्यां अधीगर्थेत्यादिना पुनर्विधान किमर्थं, कर्मणि शेषे इति च सामानाधिकरण्येन विशेषणानुपपत्तेः, कर्मत्वाविवक्षायां हि न शेष. कारकाणामविवक्षा शेष इत्युक्तफलभूत शेषविवक्षा अतिरोहितत्वात् कर्मत्वस्येत्याशङ्क्याह ।

साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ ४ ॥

कर्मादीनि साधनानि शेषस्य व्यपदेशार्थान्यत्रोपादीयन्ते न तु स्वार्थशेषे षष्ठी । कस्मिन् शेषे, कर्मणि, करण इति वा भूतावस्थानागतकर्मत्वादिरूपाश्रयेण शेषस्य विशेषणात् कर्माद्येकार्थसमवायिनि फलभूते शेष इत्यर्थो ऽवतिष्ठते। तथा च विशेषणोपपत्तिः । षष्ठी तु. सिद्धापि प्रतिपदमधीगर्थेत्यादिना नियतविषया पुनः विधीयते, समासो यथा निवर्त्ततेति पुनः प्रवृत्तिर्हि नियमार्था । तथा च षष्ठ्येव भवतीति वाक्यार्थ. । नियमे चान्यनिवृत्ति. प्रधानं अन्यथा प्रतियोगं व्यवच्छेद्य. । स चात्र षष्ठ्यभाव. स चासमासे भवतीति सामर्थ्यात् समासनिषेधो भवति षष्ठ्या. । तदुक्तं प्रतिपदविधाना च षष्ठी न समस्यत इति सूत्रव्यापार एवानेन वार्त्तिकेन च दर्शितो नापूर्वार्थ.।क्व पुनरयं समासप्रतिषेधो यत्र समासस्य प्राप्तिः। क्व च प्राप्तिः सुबन्तेषु मातुः स्मृतमिति ॥ ४ ॥

तथा च ।

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ॥ ५ ॥

कृद्योगा च षष्ठी समस्यत इत्युक्तं । तथा च कर्तृकर्मणोः कृतीति या षष्ठी तत्र भवत्येव समासः । धर्मस्मरणं मनुस्मरणमित्यादौ न शेषषष्ठीनियम. । कर्तृकर्मणो कृतीति पुनः कर्तृकर्मग्रहणाच्छेषग्रहणनिवृत्तेरित्यपूर्वविधानमिदं। तेन षष्ठ्येवेति षष्ठी नियमद्वारेण समासप्रतिषेधमावेदयते। मातु स्मृतमित्यादौ तु निष्ठाप्रयोगे न लोकाव्ययेत्यादिना कर्तृकर्मणो. कृतीति षष्ठी निषिद्धाऽधीगर्थद-

येषां कर्मणीत्यनेन कर्मणि शेषत्वेन विवक्षिते षष्ठीति सामान्येन सिद्धायां पुनर्विधानात् समासप्रतिषेधार्थं विज्ञायते । ननु च क्तस्य च वर्त्तमाने, नपुंसके भाव उपसंख्यानमित्यनेनात्र षष्ठी ॥ नैतत् । शेषविज्ञानात् सिद्धमित्यस्य प्रत्याख्यानाच्छेषषष्ठ्येवेयं पुनर्विधानेन समासाभावं ज्ञापयति । एवमपि मातु स्मृतमिति प्रयोगोऽनुपपत्तिः । स्मृतेः सकर्मकत्वात् कर्मणि निष्ठाप्रसङ्गान्मातृसामानाधिकरण्या-न्माता स्मृतेति स्यात् । सम्बन्धयन्तरापेक्षायां तु मातु स्मृताया अपि इति प्रयोगो न्याय्यः । सत्यमेतत् । कर्मादिष्वकर्मवद्वचनमिति तूक्तम् । तथा चात्रकर्मवद् भावे प्रत्यये तेन कर्मणोऽनभिधानाच्छेषविवक्ष-या तत्र षष्ठी पुनर्विधानाभावात् समासप्रतिषेधाय सम्पद्यत इति स्थितमेतत् । एवं ज्ञोऽविदर्थस्य करण इत्यादौ प्रतिपदविधाने सर्पिषो ज्ञान, मधुनो ज्ञानमित्यादि. समासप्रतिषेध उदाहार्य । ननु चात्र समासे कृते सम्बन्धमात्र प्रतीयते, न तु करणपूर्वकः सम्बन्ध इति ग्रहवाक्यार्थाभिधाने सामर्थ्याभावात् समासो न भविष्यतीति किमन्येन यत्नेन । स्ववाक्ये ऽपि नाशाब्दः सम्बन्धविशेषावसायः सादृश्यात् । तथा हि कर्मषष्ठ्यामपीदृशमेव वाक्यम् । तत्र यथाप्रकर-णादिना जानातेर्विदर्थस्य च सम्प्रत्यये कर्मषष्ठ्या अपि भवे-त्समास सत्वज्ञानं, वर्णज्ञानमित्यादौ, तथा सर्पिषो ज्ञानमित्यत्रा-पि करणादविदर्थत्वसम्प्रत्यये करणषष्ठ्या अपि भवेत्समास इति शेषग्रहणानुवृत्त्या ऽत्रापि षष्ठ्या पुर्विधानमाश्रित्य परि-हरणीय इति स्थितम् । विभक्तिविधानस्य च स्वादिविधिनैकवा-क्यत्वे ऽप्यवयववाक्यानां स्वव्यापारस्य निवृत्ते प्रतिपदविधाने न का चिदनुपपत्ति । द्विष्ठ सम्बन्धो गुणे व्यतिरिच्यत इत्युक्तम् । गुणप्रधानभावस्य चैकत्र विरोधात् भाष्य उक्तम, न हीदानीं भवति राज्ञः पुरुषस्येति तत्र प्रतिसमाधानमुक्तं भवति बाह्यमर्थमपेक्ष्येति ॥५॥

एतद्भाष्य व्याचष्टे ।

अन्येन व्यपदिष्टस्य यत्रान्यत्रोपजायते ।
व्यतिरेकः स धर्मौ द्वौ लभते विषयान्तरे ॥ ६ ॥

राज्ञः पुरुषस्य कम्बल इत्यादौ राज्ञो विशेषणेन व्यपदिष्टस्य विशेष्यत्वं तथापि तस्य प्रधानभूतस्य नात्र कम्बलादौ प्रतियोगिनि